है कि यदि हृदय में हरि का वास हो गया हो तो माया उसका कुछ नहीं बिगाड़ सकती । जिसका ध्यान भगवान विष्णु में लग गया हो, वह कभी भी पराभव को नही प्राप्त करता है। कवि आगे कह रहा है कि हे प्रभु! मैं केवल आपके चरण कमलों की सेवा करता हूँ, तब भी आप मेरे कष्टों को दूर करने में बिलम्ब क्यों करते हैं, अर्थात् मेरे कष्टों को अविलम्ब दूर करें। हृदय में हरि का वास हो जाने पर सभी विघ्नों का नाश हो जाता है।

विषयवस्तु के अन्तिम में कवि कहता है कि मेरा मन लक्ष्मी स्वरूप है, जो कि खिले हुए हृदय पद्म में एकान्त में सदा ही विष्णु के साथ संगोत्सव मनाता है। अर्थात् कवि का चित्त ब्रह्मत्व से एकत्व प्राप्त कर चुका है, जिस सीमा पर पहुँचकर वाणी आदि इन्द्रियों की गति अवरूद्ध हो जाती है। अर्थात् कवि ब्रह्मानन्द की प्राप्ति करता है। ग्रन्थ के अन्तिम श्लोक में कवि ने अपना परिचय दिया है। माता का नाम मानी और पिता का नाम विष्णु है। खुद कवि अपना नाम पुरुषोत्तम बतलाया है। इस ग्रन्थ की रचना सज्जनों के लिए की गई है।

**कवि परिचयः**

ग्रन्थकार श्रीपुरुषोत्तम भक्ति-रस धारा के सार्थवाहक हैं। उन्होंने विष्णुभक्ति की ऐतिहासिकता स्वीकार कर अपनी प्रतिभा तथा कल्पना के सहारे अनेक प्रसङ्गों का समावेश किया है। वस्तुतः उन्होंने अपनी इस रचना के द्वारा भक्ति-सिद्धान्त एवं विष्णुलीला की अन्तश्चेतना की जीवनी लिखी है। कवि ने इस ग्रन्थ में साङ्गोपाङ्ग भक्ति- रस की स्थापना की है। यह स्थापना वैष्णव जगत के लिए एक नवीन घटना है। इस ग्रन्थ में कवि का भगवान विष्णु के अतिरिक्त देवी-देवताओं के प्रति भी विशेष श्रद्धाभाव है। क्योंकि उनके द्वारा उनके देवी-देवताओं को स्मरण किया गया है। उनकी मातृभाषा क्या थी, यह तो कहना कठिन है, किन्तु संस्कृत भाषा का वे जीवन में व्यावहारिक प्रयोग करते रहे होंगे, ऐसा विश्वास है। ग्रन्थकार के जन्मस्थान के विषय में प्रमाण प्राप्त नही हो सका है, किन्तु अपने माता-पिता का परिचय इस ग्रन्थ के अन्त में दिया है। उनकी माता का नाम मानी तथा पिता का नाम विष्णु है। कवि के द्वारा इसी ग्रन्थ की एक टीका ''विष्णुकल्पलताप्रबोध'' लिखी गई है, इसका उल्लेख कैटेलॉग्स कैटेलॉगरम् के पृष्ठ संख्या-३४२ पर है। कवि ने इस ग्रन्थ की रचना करके भगवत्भक्ति के प्रति विशेष स्थान प्राप्त कर लिया।

इस ग्रन्थ का नाम विष्णुभक्तिकल्पलता है। ग्रन्थकार का नाम पुरुषोत्तम, ग्रन्थकार के पिता का नाम विष्णु टीकाकार के पिता का नाम रामभक्त तथा संयोगवशात् सम्पादक का नाम रामचन्द्र है। यह ग्रन्थ आठ स्तबकों में विभक्त है। स्तबक का नाम क्रमशः इस प्रकार है-

१.भक्ति उद्भव २. रागिविरागिफलविवेक

| | |
|---|---|
| ३.स्वाभिप्राय प्रकाश | ४. भक्त्युपद्रवनिराकरण |
| ५.गौरवदर्श | ६. विष्णुविज्ञप्तिक |
| ७.संसारतिरस्करण | ८. चित्रबोध |

इस ग्रन्थ का काल (समय) सन् १५९७ ई० के पूर्व का प्रतीत होता है, क्योंकि इसी ग्रन्थ की एक टीका सन् १५९७ ई० में ''विष्णुभक्तिकल्पलता प्रकाश'' नामक महीधर द्वारा लिखी गई है।

## छन्दोविन्यास एवं अलंकार

ग्रन्थकार पुरुषोत्तम छन्दों के प्रयोग में सुतरां दक्ष हैं। इन्होंने इस ग्रन्थ में १२ प्रकार के विभिन्न छन्दों का प्रयोग किया है। कवि के द्वारा ग्रन्थ के प्रथम स्तबक में मात्र मालिनी छन्द का ही प्रयोग किया गया है। द्वितीय और चतुर्थ स्तबक की शुरूआत बसन्ततिलका छन्द से की गई है, किन्तु द्वितीय स्तबक में रथोद्धता छन्द की अधिकता है। तृतीय, षष्ठ, सप्तम और अष्टम स्तबक के प्रारम्भ में शार्दूलविक्रीडित छन्द का वर्णन है तृतीय स्तबक के श्लोक संख्या-२ से ३८ तक द्रुतविलम्बित छन्द का समावेश है। पञ्चम स्तबक की शुरुआत स्रग्धरा छन्द में है। इन छन्दों के अतिरिक्त अन्य कई छन्दों का समावेश है, जिसका विवरण छन्दः सूची में उल्लिखित है। अलंकार में अनुप्रास, उपमा, उत्प्रेक्षा, रूपक आदि का वर्णन मिलता है। इस ग्रन्थ में अन्य अलंकारो की अपेक्षा अनुप्रास अलंकार की अधिकता है।

## टीकाकार का परिचयः-

टीकाकार महीधर ने भगत्वभक्ति से अपने पाप को घटाने तथा सांसारिक बन्धनों से मुक्ति के लिए प्रार्थना की है। इनके पिता का नाम रामभक्त तथा पितामह का नाम रत्नकार है। इनके गुरू का नाम रत्नेश्वर है तथा जन्म स्थान बनारस हैं। इन्होंने सन् १५९७ ई० में इस ग्रन्थ की ''विष्णुभक्तिकल्पलता प्रकाश'' नामक टीका लिखी। इस टीका के अन्त में इन्होंने अपना नाम महीदास भी बतलाया है। इसका प्रमाण कैटेलॉग्स कैटेलॉगरम् के पृष्ट संख्या-४४४ में भी मिलता है। इसके अतिरिक्त इनके अनेक ग्रन्थ हैं, जो अधोलिखित हैं-

| | |
|---|---|
| १. अद्भुतविवेक | २. ईशावास्योपनिषद्भाष्य |
| ३. एकांक्षरकोश | ४. कात्यायनगृह्यसूत्रभाष्य |
| ५. कात्यायनशुल्वसूत्रभाष्य | ६. नृसिंहपटल |
| ७. पुरुषसूक्तटीका | ८. मंत्रमहोदधिनौका टीका |
| ९. मातृकाक्षरनिघण्टु अथवा | १०. योगवासिष्ठसारविवृति |

मातृकानिघण्टु

| | |
|---|---|
| ११. रामगीताटीका | १२.रुद्रजपभाष्य |
| १३. वेददीप आन वाजसनेयिसंहिता | १४. षडङ्गरुद्रभाष्य |
| १५. सारस्वतप्रक्रिया टीका | १६. श्रौतमणिविनियोगसूत्रार्थ |

**मातृका परिचयः**

इस ग्रन्थ के सम्पादन में मुझे तीन मात्रिकायें राष्ट्रिय संस्कृत संस्थान (मा०वि०) गंगानाथ झा परिसर पाण्डुलिपि विभाग, प्रयाग से प्राप्त हुई हैं, जिनका परिचय इस प्रकार है-

**अ-मातृकाः**

सर्व प्रथम मुझे यह मातृका प्राप्त हुई, जिसकी अधिगम संख्या-३६८७२ है और यह मातृका पूर्ण है। अतएव इस मातृका को मुख्य आधार बनाया गया है। इसमें पत्रों की संख्या-४९ तथा कुल पृष्ठ-९८ है। प्रत्येक पृष्ठ पर आठ पंक्तियाँ है, जिसमें प्रत्येक पंक्ति में लगभग २६ वर्ण आए हैं। इसकी लिपि देवनागरी है। प्रथम स्तबक में कुछ जगहों पर पत्र टूटे हुए हैं। इस ग्रन्थ में काल का उल्लेख नहीं है।

पुष्पिका- मानी माता पिता विष्णुर्यस्याख्या पुरुषोत्तमः।
विष्णुभक्तिलतां चक्रे सतां चक्रे कृताञ्जलिः।।

इति श्रीपुरुषोत्तमकृतायां विष्णुभक्तिकल्पलतायां चित्तबोधो नामाष्टमः स्तबकः।

**क-मातृकाः-**

देवनागरी लिपि में लिखी गई यह मातृका सटीक है। यह मातृका अपूर्ण है किन्तु पठनीय है यह मातृका चतुर्थ स्तबक के श्लोक संख्या-११ तक है। अधिगम संख्या-२१८२३ है। इस मातृका में पत्रों की संख्या-३० तथा कुल ६० पृष्ठ है। प्रत्येक पृष्ठ में दस पंक्तियां तथा प्रत्येक पंक्ति में लगभग ४० वर्ण है। ग्रन्थ अपूर्ण होने के कारण इसकी पुष्पिका प्राप्त नही है।

**ख-मातृकाः-**

तीसरी मातृका 'विष्णुभक्तिकल्पलता प्रकाश' प्राप्त हुई। देवनागरी में लिखी गई यह मातृका महीधर की है। इस मातृका का अधिगम संख्या-२६५६९ हैं। यह टीका अपूर्ण और कहीं-कहीं पर अशुद्ध भी है। पत्रों की संख्या-१८ एवं कुल पृष्ठ ३६ है। प्रत्येक पृष्ठ पर १५ पंक्तियाँ और प्रत्येक पंक्ति में लगभग ५० वर्ण है। इस मातृका में कई श्लोकों की टीका नही है। टीकाकार ने टीका के अन्त में इस

टीका का परिचय दिया हैं।

पुष्पिका- श्रुतिबाणरसेन्दुमानवर्षे नभसिस्कन्ददिनेऽसितऽर्कवारे।
महिदासबुधो गिरीशपुर्यां कृतावान्कल्पताप्रकाशमेतत्॥

**मातृका का कालः-**

ग्रन्थ पुष्पिकानुसार इसका काल संवत् १६५४ है। कैटेलॉग्स कैटेलागरम् के पृष्ठ संख्या-४४४ में इस टीका का समय सन् १५९७ ई० उल्लिखित है, जो समीचीन है। यह टीका श्रावण मास के कृष्णपक्ष की षष्ठी तिथि, रविवार को गिरीशपुरी (वाराणसी) में लिखी गई।

## धन्यता ज्ञापन

इस ग्रन्थ के सम्पादन कार्य के मध्य में जिनके परामर्श एवं हस्तलेख आदि सुलभ कराने के प्रयत्न से मैं उपकृत हुआ हूँ, उनके प्रति कृतज्ञता व्यक्त करना मेरा सहज कर्तव्य है। सर्वप्रथम मैं प्रो० गयाचरण त्रिपाठी, निवर्तमान प्राचार्य, गंगानाथ झा परिसर इलाहाबाद के प्रति हार्दिक सद्भाव व्यक्त करता हूँ, जिनके द्वारा इस ग्रन्थ के सम्पादन-कार्य करने की प्रेरणा प्राप्त हुई। प्रो० प्रकाश पाण्डेय, प्राचार्य, गंगानाथ झा परिसर, इलाहाबाद के प्रति हार्दिक कृतज्ञता व्यक्त करता हूँ, जिन्होंने इस ग्रन्थ को प्रकाशित करने तथा सुसज्जित करने में अमूल्य योगदान दिया। उनकी सहज कृपा सुधांशु की उस चन्द्रिका के सदृश है जो बिना किसी हेतु के स्वभावतः मुक्त रूप से सर्वत्र शीतलता और अमृत की वृष्टि करती है एवं जो सादृश व्यक्तियों का एक मात्र आश्रय है। गंगानाथ झा परिसर, इलाहाबाद में कार्यरत शैक्षणिक अधिकारियों प्रो० शैलकुमारी मिश्रा, डॉ० विश्वम्भर नाथ गिरि, डॉ० बनमाली बिश्वाल, डॉ० ललितकुमार त्रिपाठी, डॉ० जर्नादन प्रसाद पाण्डेय "मणि", डॉ० अपराजिता मिश्रा एवं डॉ० शैलजा पाण्डेय के प्रति भी मैं आभार प्रकट करता हूँ, जिनके द्वारा ग्रन्थ के सम्पादन-कार्य में समय-समय पर वैदुष्यपूर्ण परामर्श मिलता रहा। डॉ० बीना मिश्रा एवं डॉ० रामकिशोर झा के प्रति आभार प्रकट करता हूँ, जिन्होंने अपेक्षित हस्तलेख उपलब्ध कराने एवं सम्पादन कार्य में सहयोग प्रदान किया। श्री रामरूप एवं पुस्तकालय में कार्यरत सभी कर्मचारी धन्यवादार्ह है। जिन्होंने ग्रन्थ की भूमिका आदि लिखने में अपेक्षित योगदान दिया।

एकेडमी प्रेस, इलाहाबाद के श्री एस.एम. त्रिपाठी जी भी धन्यवाद के पात्र हैं जिन्होने अनेक व्यवधानों के आने पर भी इस ग्रन्थ का पाठकों के हाथ तक पहुँचा ही दिया।

अन्त में मैं पूज्यनीया माता जी श्रीमती सुखदेवी एवं प्रतीक्ष्य चरण पिता जी श्री मातादीन को शतशः प्रणाम करता हूँ जिनसे जीवन, शक्ति, प्रेरणा और बल मिला तथा प्रति क्षण जीवन के विकास में गहन हार्दिक स्नेह एवं कृपा प्रसाद प्राप्त हुआ। मेरी धर्मपत्नी श्रीमती सुशीला देवी एवं परिवार के सदस्यों का सक्रिय सहयोग भी विशेष उल्लेखनीय है।

इस कार्य में असावधानीवश मुद्रण सम्बन्धी अथवा मेरी अल्पज्ञता के कारण यदि कोई अन्य त्रुटि रह गई हो तो विवेकशील विद्वज्जन उसके प्रति उदार दृष्टि का परिचय देगे, ऐसी मेरी आशा है। 'विष्णुभक्तिकल्पलता' ग्रन्थ विश्वजनों की सेवा में प्रस्तुत है। आशा है यह ग्रन्थ श्रद्धा और भक्ति रखने वाले सर्वजनों की आकांक्षा को पूरा करने वाला होगा।

इत्यलम्।

सम्वत्-२०६७

कार्तिक-शुक्ल पक्ष एकादशी

दिनांक १७-११-२०१०

प्रयाग

विनयानवत

रामचन्द्र

अनुसंधान सहायक

# ।। अथ श्रीविष्णुभक्तिकल्पलता प्रारभ्यते।।

## ।। मङ्गलाचरणम् ।।

नृहरिं गिरिजां गिरं गणेशं गुरुपादाब्जयुगं शिवं प्रणम्य।
हरिभक्तिलताभिधेऽत्र काव्ये विवृतिं वच्मि यथामतीशतुष्ट्ये।।

तत्र स्वाभीष्टदेवतावर्णनरूपं विष्णुभक्तिलताख्यं काव्यं विचिकीर्षुः प्रारीप्सित-ग्रन्थनिर्विघ्नपरिसमाप्त्यै शिष्टाचारपरिपालनाय च पुरुषोत्तमः कविराड्विघ्नेशस्मरण-लक्षणमाशीरूपं काव्यमुखं वदति। 'आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्' इत्युक्तेः।

## प्रथमः स्तबकः।

अतिसुदृढमगातां हर्षमङ्गैकभावा-
दधिकतममुमेशौ यं तथात्मैकयोगात्।
तदधिकमिव यातौ यं सुतं वीक्ष्यमाणौ
सफलयतु स देवो वः क्रतुं वक्रतुण्डः।।१।।

अतिसुदृढेति। उमेशौ भवानीशङ्करौ अङ्गैकभावाद्देहैक्यादति सुदृढं निबिडं हर्षं सन्तोषमगातां प्रापतुः। तथा आत्मैक्य योगादात्मनोरैक्यादधिकतममत्यधिकं हर्षमागाताम्। यथा यं सुतं गणेशं पुत्रं वीक्ष्यमाणौ विलोकयन्तौ संतौ तदधिकमिवात्मैक्यौ हर्षाधिकं हर्षं यातौ प्राप्तौ। स वक्रतुण्डो गणेशो देवो वो युष्माकं क्रतुं संकल्पं सफलयतु सफलं करोतु। मनोरथसिद्धिं करोत्वित्यर्थः। तुण्डं वक्रमिति हलायुधः। मालिनीवृत्तम्।।

स्फटिकमणिमयाक्षस्त्रक्सुधापूर्णचञ्च-
त्कनककलशवीणापुस्तकान्यादधाना।
सकलविबुधवन्द्या वाङ्मयब्रह्ममूर्ति-
र्मम कमलदलाक्षी देवता सन्निधत्ताम्।।२।।

एवंविधादेवताभारती ममसन्निधत्तां सन्निधानं सामीप्यं करोतु। कीदृशी। स्फटिकमणिमयी या अक्षस्त्रक् जपमाला सुधयाऽमृतेन पूर्णश्चञ्चच्छोभमानः कनक-कलशो हेमकुम्भश्च वीणा बल्लकी पुस्तकं च एतान्यादधाना धारयन्ती। मालाकुम्भौ दक्षिणहस्तयोर्वीणा पुस्तकेवामहस्तयोः। तथा सकलैर्विबुधैर्देवैर्वन्द्या स्तुत्या वाङ्मयं

वाणीरूपं ब्रह्म वेदः तन्मूर्त्तिः। वेदरुपेत्यर्थः। कमलदलाक्षी पुण्डरीकपत्रनेत्रेत्यनेन प्रसन्नत्वम्। प्रसन्ना देवता ध्येया सर्वाभीष्टप्रदायिनी इत्युक्तेः।। एवं सरस्वतीं ध्यात्वा सन्तः स्मरति–

**हृदयजलजजाग्रज्योतिरुद्योतितान्तः**
**करणकिरणरीणाशेषदोषान्धकाराः।**
**भवदवविवशानां तन्वते येऽभिषेकं**
**हरिचरितसुधाभिस्तेऽभिनन्दन्तु सन्तः।।३।।**

ते सन्तः सत्पुरुषा अभिनन्दन्तु आनन्दं प्राप्तुवन्तु। ते के ये हरिचरित-सुधाभिर्गोविन्दचरितामृतैर्भवदवविवशानां संसारदावानल[१]तप्तानामभिषेकं तन्वते। हरिचरितामृतैः संसारतापं शमयन्तीत्यर्थः। कीदृशास्ते। हृदयजलजे हृत्कमले जाग्रत्प्रकाशमानं यज्ज्योतिर्ब्रह्मतेजस्तेनोद्योतितं प्रकाशितं निर्मलं[२] यदन्तःकरणं तत्किरणैर्रीणाः क्षीणा अशेषाः दोषाः कामादय एवान्धकारो येषां ते तादृशाः।

एवं मङ्गलं विधाय कर्त्तव्यं प्रतिजानीते–

**अधिजगति जनानामेक एवास्त्युपायो**
**विषमतर[३]भवाब्धिं तूर्णमेतं तरीतुम्[४]।**
**श्रवणमननपूर्वं विष्णुपादारविन्द-**
**स्मरणमिति तदेतत्प्राच्यते भक्तिलोभात्।।४।।**

जगत्यामधि इत्यधिजगतिपृथिव्याम्। 'जगती विष्टपे मह्यां वास्तुछन्दोविशेषयोः' इति विश्वोक्तेः। विभक्त्यर्थेऽव्ययिभावः। विषमतमभवाब्धिं अति दुःसहं संसारसमुद्रं तूर्णं शीघ्रं तरितुं नराणामेक एवोपायोऽस्ति। को वा तमाह– श्रवणमननपूर्वं विष्णुचरणाम्बुजस्मरणमिति। सर्ववेदान्तवाक्यानामद्वैते वस्तूनि तात्पर्यावधारणं। यद्वा हरेर्गुणानां श्रवणपुटैरवधारणं श्रवणं युक्तिभिस्तदेवानुचिन्तनं मननम्। ते द्वे विधाय हरेः स्मरणं तदेतद्भक्तिलोभात्प्रोच्यते कथ्यते।।

**विमलयतु मनो मे दूषितं दोषसंघै-**
**रहरहरिह रम्या रामचन्द्रस्य भक्तिः।**

---

१. परितप्तानाम्- ख।
२. निर्मलितं-ख।
३. विषमतम-क।
४. तरितुम्-क।
५. भ्रंषितं-क।

सागरतनयभूतिभ्रेषितं[१] भूमिभागं
सुरसरिदिव दोषप्लोषविख्यातशक्तिः।।५।।

अहरहः प्रतिदिनं रम्या मनोहरा रामचन्द्रस्य भक्तिर्द्दोषसंघैः कामादिसमूहैर्भ्रंषितं[२] मम मनो विमलयतु निर्मलं करोतु। तत्र दृष्टान्तमाह- सगरस्य राज्ञः पुत्राणां कपिलकोपाग्निदग्धानां भूत्या भस्मना [२]भ्रंषितं दूषितं भूमिभागं सुरसरिद्गङ्गेव। दोषाणां पापानां प्लोषे दाहे विख्याता [३]शक्तिर्यस्याः सेत्युभयोरितिविशेषणम्॥

उपनिषदपि लेभे नैव साक्षाद्यदन्तं
न च वचनमनोभिर्योगिनो जग्मिवांसः।
शिथिलितभवबन्धा जन्तवो यस्य नाम्ना
हृदि तमभिनिबद्धं राधयाराधयामः।।६।।

उपनिषद्वेदान्तोऽपि साक्षाद्यदन्तं यस्य विष्णोर्निर्णयं न लेभे न पर्याम[४]। योगिनः सनकादयोऽपि वचनमनोभिर्वाग्भिर्मनोभिश्च यदन्तं न जग्मिवांसो न गताः। ज्ञानन्तु सुतरां दुर्घटमित्यर्थः। गमेः क्वसुः। 'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह' इति श्रुतेः। यस्य नाम्ना रामकृष्णेत्युच्चारितेन जन्तवः प्राणिनः शिथिलितभवबन्धाः शिथिलीकृतसंसारजनककर्माणो भवन्ति। राधयागोप्या यद्वा राध्यते आराध्यते अनयेति राधा भक्तिराराधना तया हृदि अभिनिबद्धं मनस्यायातं तं हरिं वयमाराधयामः।।

श्रवणविवरमाप्ता सज्जनानां प्रसङ्गा-
दनयदनयवृत्तीनप्यनेकान्दिवं या।
हृदयविहितवासा मुक्तये कस्य नासा-
दधिभुवनसमर्था जानकीजानिकीर्त्तिः[६]।।७।।

असौ जानकीजानकीर्त्तिः। जानकी जाया यस्य सः जायाया निङ्। रामकीर्त्तिर्हृदय-विहितवासा हृदयेविहित[७] कृतः वासो यस्याः सा हृदये स्थापिता सती कस्य मुक्तये

१. दूषितं-ख।
२. भ्रेषितं-ख।
३. भक्ति-ख।
४. पर्याप्ता-ख।
५. जानकीर्त्तिः-क।
६. जानकीर्तिः-क।
७. विहितः-ख।

न अपि तु सर्वस्यापि मुक्तये भवेत्। अधिभुवनं त्रिलोकेषु सा समर्था। मुक्तिं दातुमिति शेषः[१] या रामकीर्त्तिः सज्जनानां साधूप्रसङ्गात् श्रवणविवरं कर्णमार्गमाप्ता श्रुता सती अनयवृत्तीनन्यायाचारानेकानप्यजामिलादीन् दिवं द्योतमानं वैकुण्ठलोक-मनयत्प्रापयत्।।

**अधिहृदयमयं चेद्भाति भर्त्ता रमाया**
**विषमभवसमुद्रे साधुसेतुः सतां[२] यः।**
**उपनिषदमुदग्रां यष्टिमादाय हस्ते**
**कलयतु क इवात्रागाधतां तद्भवाब्धेः।।८।।**

चेद्यदि रमायाः श्रियो भर्त्ता हरिरधिहृदयं हृदयं भाति प्रकाशते। यो विषमे भवसमुद्रे सतां भक्तानां साधुः समीचीनः सेतुः। तत्तर्हि उपनिषल्लक्षणामुदग्रां यष्टिं हस्ते गृहीत्वा भवाब्धेरगाधतां गम्भीरतां क इव कलयतु जानातु। न कोऽपि। उपनिषदर्थे विचारिते ब्रह्मणि साक्षात्कृतेऽपि को वा संसाराब्धिं हरिभक्तिं विना तरति न कोपीत्यर्थः।।

**श्रुतिभिरतिभिदोक्तौ कौतुकं कुर्वतीभि-**
**र्हृदय यदयमेवाश्रीयते श्रीनृसिंहः।**
**तदिह भवभयस्याभावभव्यं[३] भज त्वं**
**चरणकमलमस्यापास्य नोपास्यमन्यत्।।९।।**

हे हृदय! यद्यस्मात् श्रुतिभिर्वेदैरयमेव श्रीनृसिंहएव आश्रीयते प्रतिपाद्यते। ननु ताभिः संसारेभेदः प्रतिपाद्यते कुतो नृसिंहस्तत्राह- अतिभिदोक्तौ भेदाख्याने कौतुकं कुर्वतीभिः। भेदाख्यानं कौतुकेनैव वास्तवं तु हरिप्रतिपादनं श्रुतेः। तत्तस्मादिह संसारेऽस्य हरेश्चरणकमलं त्वं भज। कीदृशं भवभयस्य संसारभीतेरभावे नाशे भव्यं कुशलम्। यत एतदपास्य विहायान्यन्नोपास्यं न सेव्यम्।।

**हृदि न यदि नराणां विष्णु[४]पादारविन्द-**
**स्मरणवशसमुत्थस्नेहयोगातिरेकः।**
**तदितरपरिचर्य्या जायतेऽर्थाय कस्मै-**
**कतरगुणकृदद्रौ नीरसे नीरसेकः।।१०।।**

---

१. विशेषः-ख।
२. सेनुः-क।
३. भाव्यं-क।
४. विष्णुर्पदारविन्द-क

यदि नराणां हृदि विष्णुपादारविन्दस्मरणवशेनोत्थितस्नेहयोगस्तस्यातिरेक आधिक्यं न तत्तहि इतरपरिचर्य्याऽन्यसेवा कस्मै अर्थाय कार्याय जायते। भगवद्भक्तिं विनाऽन्यसेवा अकिञ्चित्करेत्यर्थः[1]। तत्र दृष्टान्तमाह– नीरसे शुष्के अद्रौवृक्षे जलसेकः कतरगुणकृत् कं गुणं करोति न कमपीत्यर्थः।।

अनुजनुरनुभूयाप्यत्र दुःखं दुरात्म-
न्क्षणमपि हृदिरुद्धः शुद्धचित्तेन साक्षात्।
जलजदलजयिश्री मण्डितोदारनेत्रो
न बत न वतमालः श्यामवर्णो मुरारिः।।११।।

हे दुरात्मन्! अत्रसंसारे अनुजनुः प्रतिजन्म दुःखमाधिव्याधिलक्षणमनुभूयापि क्षणमपि शुद्धचित्तेन निःकपटमनसा कृत्वा साक्षान्मुरारिर्हृदि बत न रूद्धः। कीदृशः। जलजदलजयिन्या श्रीया मण्डिते उदारे नेत्रे यस्य। तथा नूतनमाल। इव श्यामो वर्णो यस्य सस्तथा।।

भवपवनवयस्यानल्पसंकल्पकीला
कृतविलसिततापः प्रौढिमानं निरीक्ष्य।
त्यज हृदय विषादं मा गमः कातरत्वं
तव नवजलदश्री रक्षिता[2] रामचन्द्रः।।१२।।

भव संसार एव पवनवयस्यो वायुसखोऽग्निस्तस्यानल्पाः बहवः संकल्पाः कामा एव कीला ज्वालाः। 'वह्नेर्द्वयोर्ज्वालकीलौ' इत्यमरः। तासां विलसितेन प्रसरेणन[3] कृतो यस्तापस्तस्य प्रौढिमानं भूयस्त्वं निरीक्ष्य हे हृदय विषादं त्यज, कातरत्वमधैर्यं च मा गमः। यतो नवजलदश्रीर्नूतनमेघश्यामो रामचन्द्रस्तव रक्षितास्ति। तमाश्रयेत्यर्थः।।

मनसि यदि मुकुन्दः कं दरं मन्द रम्ये-
तरनरकततेस्तच्चिन्तयस्यन्तकाले-
हरिचरणसरोजे जाग्रती याग्रतीर्थं
कलिकलुषमशेषं स्वर्धुनी ते धुनीते।।१३।।

हे मन्द हे मुर्ख! यदि ते मनसि मुकुन्दो हरिरस्ति तत्तर्हि रम्येतरनर-कततेरतिदुःखदायिनी यौद्यादन्तकाले कं दरं त्रासं चिन्तयसि। कमपि मा चिन्तयेत्यर्थः। कथं तत्राह– हरिचरणाम्बुजे जाग्रती या अग्रतीर्थं तीर्थमुख्यभूता स्वर्धुनी गङ्गा ते तवाशेषं सकलं कलिकलुषं पापं धुनीते नाशयतीत्यर्थः। पापोऽपि पापनिवृत्तये मुकुन्दं स्मरन्नरकं न यातीत्यर्थः।

ननु प्रायाश्चित्तं विना कथं पापक्षयस्तत्राह–

चिरममरतरङ्गिण्यादिसत्तीर्थसेवा
व्रतनियमजपा वा ये च दत्तप्रभावाः।
न च सकलसमृद्ध्या साधिता बाधितारः
स्मरणसुकृतलक्ष्मीमध्वरा मध्वरातेः।।१४।।

चिरकालं गङ्गादि सतां तीर्थानां सेवा व्रतानि प्रायश्चित्तानि नियमाः स्नानसन्ध्यादयः जपामन्त्रादीनां सकलसमृद्ध्या बहुधनेन[१] साधिताः सम्पादिता अध्वरा यज्ञा एते दत्तप्रभावाः दत्तप्रभावोफलं यैस्ते ईदृशा अपि मध्वरातेर्मधुसूदनस्य स्मरणसुकृतलक्ष्मीं स्मरणोत्छ[२]पुण्यशोभां न बाधितारो न जेतारः। हरिस्मरणतुल्यं पुण्यं नास्तीत्यर्थः।।

श्रय हृदय रमायाः कान्तमन्यत्र मा या
न धनतनयजायाः श्रेयसां सम्प्रदायाः
व्यवहृतिमदुपायाः [३]सर्वशस्तेऽन्तरायाः
शमनशयगतं को रक्षिता त्वामपायात्।।१५।।

हे हृदय! रमायालक्ष्म्याः कान्तं श्री हरिं श्रय सेवस्व। अन्यत्र मा याः मा गच्छ। या तेर्लुङ्। धनपुत्रस्त्रियः श्रेयसां मङ्गलानां सम्प्रदाया मार्गा न भवन्ति। व्यवहृतिमति व्यवहारयुक्ते संसारे तस्य वा ये उपास्यते सर्वशः सर्वप्रकारैरन्तराया विघ्ना एव। शमनशयगतम्। 'शमनो यमराड्यम' इत्यमरः। शयो हस्तः। यमहस्तगतं त्वामपायान्नरकदुःखात्को रक्षिता न कोऽपि हरिं विनेत्यर्थः।।

शिथिलय भवजालं चिन्तयानन्तयालं[४]
श्रय हृदय दयालुं केवलं नन्दबालम्।
न विधिविदितपारं [५]संहृतक्षोणिभारं
निखिलनिगमसारं ब्रह्म यन्निर्विकारम्।।१६।।

---

१. बहुसाधनेन–ख।
२. स्मरणोत्पन्न–ख।
३. सर्व्वशस्ते–क।
४. चिन्तयाऽनन्तयाऽलं–क।
५. संहत–क।

हे हृदय्! भवजालं संसारबन्ध शिथिलय श्लथं कुरु। अनन्तया बहवया चिन्तया अलम्। चिन्ता न कर्त्तव्येत्यर्थः। केवलं नन्दबालं श्रीकृष्णं श्रय। कीदृशम्। दयालुं दयावन्तम्। न विधिना ब्रह्मणा विदितः पारो यस्य तम्। संहृतो भूभारो येन तम्। निखिलनिगमसारं सर्ववेदोपनिषत्प्रतिपाद्यम्। यन्निर्विकारं मायातीतं ब्रह्मैव तं श्रयेत्यर्थः।।

वसतिरसति विष्णुध्यानयोगे नराणा-
मणि सुकृतपराणामस्ति गर्भे जनन्याः।
हृदि भज तदजस्रं निर्मले कर्म्मलेप
व्यपनयननिमित्तं तं पतङ्गेन्द्रकेतुम्।।१७।।

सुकृतपराणां पुण्यवतां नराणामपि विष्णुध्यानयोगे हरिस्मरणे असत्यविद्यामाने सति जनन्य गर्भे वसतिर्निवासोऽस्ति। तत्तस्मात् हे जीव![1] निर्मले हृदि तं पतङ्गेन्द्रं केतुं गरुडध्वजमजस्रं निरन्तरं त्वं भज। कर्मलेपस्य कर्मबन्धस्य व्यपनयने निराकरणे निमित्तं हेतुभूतम् इति भजने हेतुः।।

त्रिचतुरदिवसान्तर्धानवानेव मृत्यु-
र्नरकभयविमुक्तो विद्यते कोऽत्र जन्तुः।
हृदि तदिह न किं स स्मर्य्यते कंसशत्रुः
स्मरणमपि यदीयं योगयागातिगामि।।१८।।

त्रयश्चत्वारो वा त्रिचतुराः। अचतुरेत्यादिना सूत्रेणाऽच्प्रत्ययान्तो निपातः। त्रिचतुरादिवसान्तर्द्धानमस्यास्तीति। त्रिचतुर दिवसान्तर्द्धानवान्। अल्पदिवसानन्तर-मेवागामी मृत्युः। तर्हि का क्षतिस्तत्राह- अत्र संसारे नरकभयहीनः को जन्तुर्नकोऽपि विद्यते। तत्तस्मादिह संसारे सः कंसशत्रुर्हरिर्हृदि किं न स्मर्य्यते। यदीयं स्मरणं योग यागातिगामि। अष्टाङ्गयोगमश्वमेधादियागं चातिगच्छति। योगयागाभ्यामुत्कृष्टमित्यर्थः।

रसवदपि समस्तं पश्य संसारवृक्षा-
त्फलमविरलदोषं यच्च भूतं भविष्यत्।
व्रजति परिमलायोत्कण्ठिता कं प्रमोदं
मिलितमलितरूण्या पद्ममासाद्य नासा।।१९।।

संसारवृक्षाद्यद्भूतं जातं भविष्यच्च फलं कान्ताकनकादिकं तत्समस्तं रसवत्स्वादुत्तरमपि अविरलदोषं बहुदोषयुक्तं पश्य विचारय। तत्र दृष्टान्तः- नासा नासिका परिमलाय गन्धग्रहणयोत्कण्ठा सती अति तरुण्या ेभ्रमर्य्या मिलितं पद्मं प्राप्य कं प्रमोदं हर्षं व्रजति प्राप्नोति। न कमपि पुनर्भ्रमर्य्याद्दष्टादुःखमेवाप्नोति। तथा

---

१. हे नर-ख।

संसारसुखासक्तिरित्यर्थः।।

भवफणिमणिनारी नेत्रनिध्यानमूर्छ-
ज्जनमनसि न सिद्धिर्यस्य सेवां विहाय।
अयि स हृदि न कस्मात्पन्नगारातिकेतु-
र्भवजलनिधिसेतुः स्मर्य्यते मुक्तिहेतुः।।२०।।

भवः संसार एव फणी सर्प्पस्तस्य मणिस्थानीया नारी तस्य नेत्रनिध्यानं चक्षुरवलोकनं तेन मूर्छन्मुह्यज्जनमनो नरान्तःकरणं तत्र यस्य सेवां विहाय सिद्धिर्नास्ति। अयीतिकोमलामन्त्रणे। हृदि गरुडध्वजो भवाब्धितारको मुक्तिकारणं स हरिः कस्मान्न स्मर्य्यते।।

हरिणचरणमात्रं कामिनीनां प्रतीकं
कमपि कलयतस्ते कोय्योऽगुर्युगानाम्।
परिणति रसवत्ता नैवतत्रानुभूता
प्रथमपदमितस्तद्धेहि मुक्तवा णभाद्यम्।।२१।।

मृगपदप्रमाणं नारीणां प्रतीकं 'अङ्गं प्रतीकोऽवयोऽपधनः' इत्यमरोक्तेः। अङ्गं योन्याख्यं कमप्यनिर्वाच्यं कलयतो ध्यायतस्ते तव युगानां कोटयोऽगुर्गताः[१]। युगकोटिमित कालानुभवेनापि तत्राङ्गे[२] परिणतिरसवत्ता परिपाकस्वादुता नानुभूता। नालं बुद्धिजातेत्यर्थः तत्तस्मादितोऽस्मिन् श्लोके आद्यं णं णकारं हरिचरणचरणेति[३] णकारद्वयमध्ये प्रथमं णं मुक्त्वा प्रथमपदं श्लोकस्याद्यं पदं हरिचरणमात्रदं धेहि चित्ते धारय। दधातेर्लोटि 'ध्वसोरेद्धावभ्यासलोपएकारश्च[४]।

शमयति भवतन्द्रामस्य नासामृतं द्रा-
गपि न रसनसक्तं कस्य नोद्दामशक्तिः।
किमु न कमनमेनं मानसे तद्रमायाः
श्रयसि पयसि सुप्तं लीलया दुग्धसिन्धोः।।२२।।

अस्य हरेर्नामामृतं द्रागपि मनागपि। रसनसक्तं जिह्वालग्नं सत्कस्य भवतन्द्रां संसारनिद्रां न शमयति। यत उद्दामशक्ति दृढसामर्थ्यम्। तत्तस्माद्दुग्धसिन्धोः पयसि[५] लीलया सुप्तं एनं रमायाः कमनं कान्तं मानसे किमु न श्रयसि किमिति न सेवसे।

---

१. ऽर्युर्गताः-ख।

२. तवाग्रे-ख।

३. हरिचरणेति-ख।

४. लोपकारएकारएकारश्च-ख।

५. पयसा-ख।

अपि तु सेवस्वेत्यर्थः।

दधति मुदमुदारां नाकिवृन्दे नभस्छे
निखिलनृपनृशंसे कम्पमाने च कंसे।
सह सबलभुजैस्तैर्दानवौ रङ्गवाटे-
रमितममितशक्तेर्यस्य वक्तुं न शक्यम्।।२३।।

अमितशक्तेर्बहुसामर्थ्यस्य यस्य हरेः सकलभुजैर्बलवद्बाहुभिस्तैः प्रसिद्धैश्चाणूरादिभिर्दानवैः सह रङ्गवाटे मल्लरङ्गे रमितं क्रीडितं वक्तुं न शक्यम्। क्व सति[१], नभस्छे आकाशगते नाकिवृन्दे देवसमूहे उदारां महतीं मुदं हर्षं दधति सति। तथानिखिलनृपनृशंसे सकलराजधातुके कंसे कम्पमाने सति।।

तमिह किमु रमाया वल्लभं मल्लभङ्गो-
त्सवभवदवलेपोत्पत्तिजेतारमन्तः।
स्मरसि न विनयानुस्यूतसूक्तामृतौघैः
स्तुतमतुलयशोभिः शोभिवृन्दैः सुराणाम्।।२४।।

इह संसारे तं रमायाः[२] वल्लभमन्तश्चित्ते किं न स्मरसि। कीदृशम्। मल्लानां भङ्गेन उत्सवस्तस्माद् भवन्ती या अवलेपोत्पत्तिर्गर्वोत्पत्तिस्तस्या जेतारम्। मल्लभङ्गेनापि गर्वहीनम्। तथा अतुलयशोभिनिरूपमयशोन्वितैः सुराणां शोभिवृन्दैः शोभमानसमूहैः कर्तृभिर्विनयेनानुस्यूता संवद्धा ये सूक्तौ मृतौघाः सुवचनसुधासमूहास्तैः कृत्वा स्तुतम्।।

सुकृतमकृत किं किं चित्रमासर्गकाला-
दहह सपरिवारो नन्दगोपश्च नैनः।
इह विहितहितश्रि प्रत्तमुक्त्यच्युत त्वां
फलमलभत यस्माद्बन्धुरं बन्धुरत्नम्।।।२५।।

अह हेत्याश्चर्ये। सपरिवारो नन्दगोप आसर्गकालात्सृष्टिकालमारभ्य चित्रमाश्चर्य्यकारि किं किं सुकृतं पुण्यमकृत। एनः पापं च नाकृत। हे[३] अच्युत! विहिते हितश्रियौ येन तत् [४]हितकारिसम्पद्दातृ। प्रत्ता दत्ता अर्थाद्भक्तानां मुक्तिर्येन तन्मुक्तिदम्। बन्धुरं मनोहरं त्वां बन्धुरत्नं त्वल्लक्षणं बान्धवश्रेष्ठं फलं यतोऽलभत प्राप। पुण्यं विना हरिपितृत्वं कथं स्यादिति। नन्दस्यपुण्यं नानाजन्मगतमनुमीयत इत्यर्थः।

---

१. क्व वसति-ख।
२. माया बल्लभं-ख।
३. इह अच्यूते-ख।
४. कारां सम्पदां-ख।

विधिरतनुत मर्त्त्यान्मुक्तिमार्गोपरोधो-
द्धुरतररजसादौ तेन मे राजसीयम्।
स्फुरदमरसरित्वत्पादपद्मावगाहा-
द्भवतु हृदयवृत्तिर्नीरजा नीरजाक्ष।।२६।।

विधिर्ब्रह्मा मर्त्त्यान्मनुष्यान्मुक्तिमार्गस्योपरोधे प्रतिबन्धे उद्धुरतरं समर्थतरं यद्रजो रजोगुणस्तेन सृष्ट्यादानवतनुतासृजदातेन रजोगुणसृष्टत्वेन राजसी रजोगुणप्रधाना मे मम हृदयवृत्तिर्हे नीरजाक्ष! कमलपत्रनेत्रस्फुरन्ती [१]सुरसरिद्गङ्गायस्मिन्नेवविधस्य त्वत्पाद-पद्मस्यावगाहान्नीरजा[२] निर्मला भवतु। रजस्वलं जलावगाहान्निर्मलं भवतीत्यर्थः।।

यदहमदहमुक्त्यानिष्टया हृज्जनानां
चकर च करपातं यत्परस्वे प्रमत्तः।
श्रुतिपथिपथिको यन्नाभवं तन्मुरारे
मम समभिसहस्वादीनवं दीनबन्धो।।२७।।

अनिष्टयोक्त्या अप्रियवचनेन जनानां हृच्चित्तमहं यददहं दग्धवानस्मि। यच्च प्रमत्तः सन्[३] परस्वे परधने करपातं हस्तसंचारं चकरकृतवानस्मि। 'णलुत्तमो वेत्ति वृद्धभावे गुणः। यच्चश्रुतिपथपथिको वेदमार्गचारी नाभवं न भूतः। हे मुरारे, हे दीनबन्धो! मम तमादीनवं दोषं समभिसहस्व क्षमस्व। दोष आदीनवो मतः।।

भवजलनिधिमध्ये हर्षसंघर्षतर्ष-
प्रमुख विषमवीचिव्याकुलं वीक्ष्यविष्णो।
चरणकमलनावं भावगम्यां मुनीन्द्रै-
रपि सदयतया मे यच्छ यच्छ प्रसीद।।२८।।

संसारसमुद्रमध्ये हर्षः सन्तोषः संघर्षः स्पर्द्धा तर्षतृष्णा तत्प्रमुखास्तदादयो या विषमा बीचय ऊर्म्मयस्तैर्व्याकुलं मां वीक्ष्ये हे विष्णो! मुनीन्द्रैरपि भावगम्यां चरणकमललक्षणां नावं सदयदया[४] मे यच्छ यच्छ देहि देहीति। प्रसीद। तस्मात्प्रसन्नो भवः अत्यातुरया वीप्सा। समुद्रे मज्जतो नौरेव तारिका।।

स्फुरितसरितमातन्वानमानन्दमुच्चैः
सपदि सुपदपद्मं प्राप्य कृष्ण त्वदीयम्।

---

१. अमरसरित्गङ्गा-ख।
२. नीरजनीर्मला- ख।
३. अनवहितोऽहं परस्वेऽन्यधने विषये करयातं प्राणि संसारं-ख।
४. सदयतया- ख।

दुरितभरितमेतन्मामकं देव चेतो
विमलितमलमस्तु प्रस्तुतत्वत्सपर्य्यम्।।२९।।

स्फुरिता सरिद्गङ्गा यस्मितम्। उच्चैरतिशयेनानन्दमातन्वानं विस्तारयन्तम्। हे कृष्ण हे देव! त्वदीयं शोभामानं[1] पादपद्मं प्राप्य सपदि एतन्मामकं दुरितभरितं[2] पापाक्रान्तं चेतः प्रस्तुता त्वत्सपर्य्या भवत्पूजा येनेदृशं[3] सद्विमलितमलमस्तु निर्मलं भवतु।।

दमय मम यतीन्द्रध्येय चेतः प्रभूता
पदमपि यदवेत्य प्रेत्य [4]दुर्गत्यवच्छम्।
सरभसमसदुच्चैराचरन्नैति भीतिं
तदव यदवलम्बः संसृतौ न त्वदन्यः।।३०।।

हे यतीन्द्रध्येयसनकाद्यैश्चिन्तनीय! मम चेतो दमयं। यद्यस्मादसद्दुष्टमाचारन्नपि नरः प्रेत्य मृत्वा प्रभूतापदं बहुविपत्तियुक्तामपि दुर्गत्यवच्छां नरकयातनामत्यवेत्य ज्ञात्वापि भीतिं नैति न प्राप्नोति। दुष्टाचारो नरकभयं श्रुत्वापि न विभेतीत्यर्थः। तत्तस्मादव रक्ष। यतः संसृतौ संसारे त्वदन्योऽवलम्ब आश्रयो नास्ति।।

त्वदपि भुवनमध्ये को वदान्यो वदान्यो
नहि परपरिलभ्य्यं देव विश्वं भरत्वं।
इदमहमभियाचे तद्विहाय त्वदङ्घ्री
क्वचर चरतु चेतो मामकं मा मुकुन्दा।।३१।।

हे मुकुन्द! भुवनमध्ये त्रैलोक्ये त्वदन्यः को वदान्यः त्वं वद। वाक्यार्थस्य कर्मत्त्वम्। 'प्रियवाग्दानशीलश्च वदान्यः परिकीर्त्तितः'। हे देव! विश्वंभरत्वं परपरिलभ्यं अन्यप्राप्यं नहि। तत्तस्मादहमिदमभियाचे[5]। मामकं चेतः त्वदङ्घ्रि विहाय क्वचन मा चरतु मा यातु।।

शमय मम यमस्य त्रासमत्रासमाना
पदि सपदि हृदि त्वं कृष्ण तिष्ठन्निमेषम्।

---

१. शोभनम्- ख। २. दुरितचरितं- ख।
३. येन तादृशम्-ख। ४. दुर्गत्यवस्थाम्-क।
५. याते-ख। ६. भीति- क।

जगति न गतिरन्या त्वां विना क्वापि धन्या
प्रभवति भवतिग़्माभील[६]निर्मीलनाय।।३२।।

हे कृष्ण! असमानापदि अनुपमपीडेऽत्रास्मिन्मम हृदि सपदि निमेषं तिष्ठन् यमस्य त्रासं शमय यतो जगति भवतिग्माभीलनिर्मीलनाय संसारस्य तीव्रभयोन्मूलनाय त्वां विना अन्या धन्या श्रेष्ठा गतिरूपायो न प्रभवति।।

अव भवदवदौःस्थादिन्दिरालोचनेन्दी-
वरमधुरतरश्रीसङ्गरङ्गदृगंशम्।
मयि सदय निधायानन्त यद्योगजाग्र-
न्मुदतिशयवशात्मा न स्मराम्येव किञ्चित्।।३३।।

हे सदय! हे अनन्त! इन्दिराया लक्ष्म्या लोचनेन्दीवरस्य नेत्रकमलमधुरतरा रम्या या श्रीः शोभा तस्याः सङ्गेन रङ्गन् क्रीडन् यो दृगंशः कटाक्षस्तं मयि निधाय भव दवदौच्छात् संसारदावानलदुःखादव रक्ष। यद्यतोऽवनेन योगेन जाग्रत्स्फरन्यो मुदतिशयो हर्षवेगस्तद्वशात्मा सन् किञ्चिन्न स्मराम्येव।।

एततमहितहेतुं हन्तु हन्तुर्मधोर्वः
सकलसुकृतसारः पादपद्मोपचारः।
भवति हृदयशुद्धा मानवो यद्विधाना-
द्दलितदुरितभारः प्राप्तसंसारपारः।।३४।।

[१]सकलसुकृतानां मध्ये सारभूतो मधोर्हन्तुर्मुरारे पादपद्मोपचारश्चरणाम्बुजसेवनं सततं वो युष्माकमहितहेतुं दुःखकारणीभूतं पापं हन्तु नाशयतु। चित्तशुद्धाय द्विधानान्मानवो[२] दलितदुरित[३]नष्टपापपुञ्जः सन्प्राप्तसंसारपारो भवति।।

मधुरिपुपदलग्नं चित्तमार्यस्य हर्त्तुं
कथमपि न समर्था दस्यवो दर्पकाद्याः।
सुमतिबलिविमुक्तं शक्नुवन्ति प्रमार्ष्टुं
किमु हरिकरमध्याद्दानवा दानवारि।।३५।।

---

१. सकृतसुकृतानां-ख।
२. द्विधानात् यस्य पादपद्मोपचारस्य विधानात्-ख।
३. दुरितभारो-ख।
४. कोऽनङ्ग कामं पञ्चशरः-ख।

दर्पकाद्याः कामद्याः दस्यवो वैरिण आर्य्यस्य पुण्यवतो नरस्य हरिपदसक्तं fp Ûka gÛkg d Fle fi u le FkZA ^d Uhikaid kguõ %[4]' इत्यमरः। तत्र दृष्टान्तमाह शोभनमतिर्यो वलिस्तेन विमुक्तं श्री हरिकरे। अर्पितदानवारि दानोदकं हरिकरमध्याद्दानवाः fd aiek'gfujkd Ùkg'kDuqfLrA oleugLrkÍkulad acfy nत्तं यदा सा दैत्या नापहर्त्तुं शक्तास्तद्वदित्यर्थः।।

दशशतदलपद्मं यस्य तच्छत्रमुच्चै-
र्वरचमरमहेला पिङ्गलेला च पुण्या।
अनपरपरिमुक्तं भाति भद्रासनं [1]त-
त्हृदयकमलमेकं सार्वभौमः स जीयात्।।३६।।

तत्प्रसिद्धं द्वादशान्तःस्थं सहस्रदलपद्मं यस्योच्चैः छत्रं। पुण्या पवित्राइला पिङ्गला च नाडी वर चमरमहेला। चामरधारिणी स्त्री। 'अबला महेला ललनेति कोशः'। अनन्यपरिभुक्तं सत्श्रेष्ठं हृदयकमलमेकं यस्य सिंहासनं भाति स सार्वभौमश्चक्रवर्त्ती जीयात्।।

सुरभिखुरभिदाभृत्भूतलोद्धूतधूली
धरममरमहेलामोहबाहुल्यहेतुम्[2]।
अमृतकरमुखीनां वल्लभो वल्लवीनां
दधदवतु वपूर्वः कायभाजामपूर्वः।।३७।।

सुरभीणां धेनूनां खुरैर्भिदां विभर्त्ति एतादृशं यद्भूतलं तस्मादुद्भूतायाः धूली तद्धारकममरमहेलानां[3] स्वर्गस्त्रीणां मोहवाहुल्ये हेतुभूतं वपुर्दधत्। अमृतकरमुखीनां चन्दवदनानां वल्लवीनां गोपीनां बल्लभः। कायभाजां शरीरिणामपूर्वो मुख्यो हरिर्वो युष्मान् अवतु रक्षतु।।

नयनकमलयुग्मछत्रभृद्यत्रनासा
करनखरमरीचिप्रस्फुरच्चामरश्रीः।
अधरमधुरतायाः सार्वभौमोमुरारे-
र्जगति जयति वंशो विश्वविश्वैकवन्द्यः।।३८।।

यत्र वंशे नासादण्डो नयनकमलयुग्ममेवच्छत्रं विभर्त्ति तादृशः। हस्तनखानां

---

१. सत्- क।
२. हेतो- क।
३. महिलानां-ख।
४. ओष्टमाधुर्यस्य-ख।

मरीचयः किरणा एव प्रस्फुरन्ती चामरश्रीर्यस्यसः। विश्वं सर्वं यद्विश्वं जगत्तस्यैकवन्द्यो-ऽसाधारणस्तुत्योऽधरमधुर्तायार्तुष्टमाधुर्यस्य[४] सार्वभौमो राजा माधुर्यग्राहको मुरारेर्वंशो जगति भूतले जयति सर्वोत्कर्षेण वर्त्तते।।

चरणकमललीला बालगोपालमूर्त्ते-
र्जयति रुचिभिरिभ्या निर्भराभ्यासलभ्या।
शकटतनुमनूनं वज्रतः कर्कशत्वा-
च्छतशकलमकार्षीद्या सुमृद्वी सुरारिम्।।३९।।

*इति श्री"विष्णुभक्तिकल्पलतांख्ये" कवि श्रीपुरुषोत्तमकृतौ*
*"भक्त्युद्भवोनाम"[५] प्रथमः स्तबकः।।*

बालगोपालमूर्त्तेः पादपद्मलीला अत्यन्ताभ्यासप्राप्या कान्तिभिरिभ्या आढ्या जयति सुतरां मृद्वी कोमला या कर्कशत्वात्काठिन्येन व्रजतो व्रजादनूनं वज्रसदृशं शकटतनुं शकटशरीरं मुरारिं दैत्यं शतशकलं शतखण्डमकार्षीत्कृतवती। करोतेर्लुङ्रूपं। 'शकटासुरभञ्जनः' इति पुराणात्।

***इति श्री महीधरकृते विष्णुभक्तिकल्पलताविवरणे 'भक्त्युद्भवो' नाम प्रथमः स्तबकः।।***

# द्वितीयः स्तबकः।

अव्यादवाङ्मनसगोचररूपशीला
लीलावती यतिहृदम्बुजराजहंसी।
एषा ललाटफलकार्पितचन्द्रलेखा
शेषाहिशायिभगिनीदुरितादशेषात्।।१।।

वाङ्मनसयोरगोचरमविषयं रूपं शीलयति धारयती तादृशी। लीलायुक्ता यतीनां हृत्कमले राजहंसी। ललाटपट्टेऽर्पिता चन्द्रलेखा यया सा। शेषनागशायिनो हरेर्भगिनी दुर्गा अशेषात्समग्राद्दुरितात्पताकादव्यात् रक्षतु। 'नन्दगोपकुले जातेति' मार्कण्डेयोक्तेः। 'वसन्ततिलकावृत्तम्'।।

यन्निमेषमपि रे वृषं विना
वर्त्तसे मिथुनभावतोषितः।
कर्कशत्वमिदमात्मनि स्फुटं
पश्य सिंहमिव मृत्युमुद्धतम्।।२।।

रे जन्तो, निमेषमपि मिथुनभावेन स्त्रीसंयोगेन तोषितः सन्यद्वृषं विना धर्महीनो वर्त्तसे इदं धर्महीनत्वमात्मनि कर्कशत्वं स्वस्यैव दुःखदायित्त्वं। यत् उद्धतं सिंहमिव स्फुटं प्रगटं मृत्युं पश्य। रथोद्धतावृत्तं। 'शन्नराविह रथोद्धतालगौ' इत्युक्तेः।।

श्री गोपालाय गुरवे नमः।।

कन्यकावसुतुलादिदानतो
यद्यसह्यभववृश्चिकव्यथा।
[1]नैवशाम्यति ततो बलिष्ठया
रामनामसुधयास्व सुस्छितः[2]।।३।।

यदि यतः कन्याकनकतुलादिदानेनापि असह्यासंसाररूपवृश्चिकपीडा नैव शाम्यति ततो बलवत्या रामनामरूपसुधया सुस्छितः आस्व तिष्ठ। आस्तेर्लोटि मध्यमैकवचनम्।।

---

१. नैवर्शम्यति-क।

२. सुस्थितः-क।

रामनामधनुषा भवाभिधं
भिन्द्धि रे मकरमन्यथात्मकम्।
कुम्भमध्यगतमीनवद्दशा-
मेति कामिह न[1] हाग्रहाकुलः।।४।।

रे जन्तो! अन्यथात्मकं मिथ्यास्वरूपं स्वप्नप्रायं भवाभिधं संसाररूपं मकरं ग्राहं रामनामरूपेण धनुषा भिन्द विदारय। ह स्फुटं इहाग्रहेण संसाराग्रहेणसक्तया आकुलो व्यग्रः कुम्भमध्यगतमीनतुल्यां कां दशामवस्थां नैति न प्राप्नोति अपितु प्राप्नोति। दुःखमेवानुभवतीत्यर्थः।।

अस्तमेति दिवसात्पये रवि-
श्चन्द्रमा अपि विशेषतः क्षयी।
मङ्गलोपरि मनः कयाशया
तत्करोति जगतीतले बुधः।।५।।

रविर्दिवसान्तेऽस्तं याति। चन्द्रोऽपि विशेषतः क्षयवान्। चन्द्रसूर्ययोरपि विपदं दृष्ट्वा जगतीतले बुधो मङ्गलोपरि कल्याणप्राप्तौ कया तृष्णया मनः करोति।। भवानीशङ्कराभ्यां नमः।

जीव पीवरमथेतरद्वपुः
शुक्रशोणितसमुद्भवं सदा।
प्राप्यमेव हि परं शनैश्चर-
भ्रातृभूतभयभेषजं भज।।६।।

हे जीवजन्तो! पीवरं स्थूलं हस्त्यादिक मथेतरत्सूक्ष्मं मशकादिकं वपुः शुक्रशोणितजातं सदा प्राप्यमेव हि यतः। अतः परं केवलं शनैश्चरः भ्रातुर्यमस्यभूतेभ्यो यमदूतेभ्यो यद्भयं तत्भेषजं तन्निवर्त्तकं हरिं भज सेवस्व।।

राहुणा यदिव रोहिणी पति-
[2]र्ग्रह्यसे नहि लुलायुकेतुना।
तावदेव कुरु यत्नमच्युता
राधने धनधियं धिगन्ध ते।।७।।

राहुणाचन्द्रइव लुलायुकेतुना महिषध्वजेन यमेन यावन्न गृह्यसे। 'ग्रस्यसे' इति वा पाठः। तावदेवाच्युताराधने हरिभजने यत्नं कुरु। हे अन्ध! ते तव बुद्धिं धिक् तां मा कार्षीरित्यर्थः।।

१- कामिहहनग्रहाकुलः -क
२- गृह्यसे-क।

अष्टमी भव तनुर्महेशितुः
कैटभारियजनाय यत्नतः।
यौवनेऽसि नवमीनकेतनः
किं त्वमत्र दशमी करिष्यसि।।८।।

हे जन्तो! यत्नतः कैटभारेर्हरेर्यजनाय महेशितुः शिवस्याष्टमी तनुर्दीक्षितोभव। 'पञ्चभूतानि सोमार्कौ यज्वेत्यष्टामूर्त्तयः' इत्युक्तेः। 'भूतेन्दुसूर्ययज्वानः शङ्करस्याष्टमूर्त्तयः' इति च। यौवने नवो नूतनो मीनकेतनः कामो यस्य इदृशोऽसि। अत्र संसारे दशमीवृद्धः सन्किं करिष्यसि। जरायां शरीरासमर्थ्यात्। 'वर्षीयान्दशमीज्यायानित्यमरः'। दशमो अवस्छाविशेषो यस्येति क्षीरस्वामी।।

अय्यनेकविधिवेदनाकुले
मातृकुक्षिकुहरे कृतौकसः।
आमनस्यमपि ते मनस्यहो न प्रकाशमुपयाति किंनु तत्।।९।।

अयीति सम्बोधने! हे जन्तो! अनेकविधाभिर्वेदनाभिराकुले व्याप्ते मातृकुक्षिकुहरे जननीजठरविवरे कृतौकसौ विहितनिवासस्यापि ते तव मनसि आमनस्यं प्रसवजनितदुःखं प्रकाशं नोपयाति न स्फुरति। अहो आश्चर्य्यं किंनु तत्। 'आमनस्यं प्रसूति जमित्यमरः'।।

बुद्धिरस्ति यदि विष्णुयोगिनी
तद्भयं किमिह कालपाशतः।
मेरुमौलिरमरापगाप्लवो
दह्यते किमु दवेन वह्निना।।१०।।

यदि बुद्धिर्विष्णुयोगिनी हरियुक्तास्ति तत्तर्हि इह संसारे कालपाशतो भयं यमयातनाभीतिः किम्। न किमपीत्यर्थः दृष्टान्तमाह- अमरापगायाः गङ्गाया आप्लवः प्रवाहो यस्मिनीदृशो मेरुमौलिर्दवेन वह्निना दावानलेन किमु दह्यते नेत्यर्थः।।

सिद्धिरस्ति सुकुतानुसारतः
सारतर्कसुहृदेष निर्णयः।
अर्जितव्यमनिशं यशोधनं
शोधनं यदतुलापराधतः।।११।।

सुकृतस्य पुण्यस्यानुसारेण सिद्धिरस्तीत्येष निर्णयः सिद्धान्त सारतर्कसुहृत्समीचीनस्य तर्कस्य सहायोऽनुसारीत्यर्थः। तत्स्वरूपमाह-यत् समग्रापराधानां शोधननाशकं तद्यशोलक्षणं धनमनिशं निरन्तरमर्जितव्यम्। सुकृतेनैव यशो भवतीत्यर्थः।।

अर्ज्जुनीयति यदर्ज्जने जनो
वर्ज्जनीयजनसेवनादिभिः।

मङ्क्षु नश्यति चिराय सञ्चिता
वञ्चिता जगति के न संपदा।।१२।।

यदर्ज्जने यस्याः सम्पदः अज्जने वर्ज्जनीयानां कुत्सितानां जनानां सेवनादिभिर्जनोऽर्ज्जुनीयति तृष्णतुल्यो भवति। कुत्सितानुसरणेन लाघवं यातीत्यर्थः। 'अर्जुनं च तृणे नेत्ररोगेऽर्ज्जुनः पार्थे च हैहये। केकिनिद्रुमे इति कोशः। अर्ज्जुनमिवाचरति। 'उपमानादाचारे' इति क्यच्। क्वचि चेतीत्वम्। चिराय सञ्चिता मङ्क्षु शीघ्रं या नश्यति तया संपदा जगति के नरा न वञ्चिता। सर्वेऽपि तदाशक्त्या वञ्चिता इत्यर्थः।।

भा [1]रतीशितुरिवास्तु विग्रहे
भारती भवतु वाक्यतेरिव।
भारतीह सकलोऽपि तद्गुणो
यस्य भक्तिभक्तिरचला न माधवे।।१३।।

विग्रहे शरीरे रतीशितुः कामस्येव भा कान्तिस्तु। वाक्पतेर्गुरोरिव भारतीवाग्भवतु। परन्तु यस्य माधवे निर्मला भक्तिर्नास्ति। सकलोऽपि कान्तिपाण्डित्यादिः तस्य गुणो भारती भार इवाचरति। 'सार्वप्रातिपदिकेभ्यः क्विबाचारे' इति क्विप्।।

जीवितव्यमतिमात्रचञ्चलं
यादृशं [2]कमलनीदले जलम्।
तद्विधाय हृदयं सुनिर्म्मलं
चिन्तयस्व हरिमेव केवलम्।।१४।।

पद्मिनीपत्रे यादृग्जलं तादृग्जीवितव्यमतिचञ्चलं। तत्ततो हृदयं निश्चलं कृत्वा केवलं हरिमेव चिन्तयस्व।।

योनियन्त्रणविधा न वेद ना
लीलयेन्द्रियचयस्य खेलतः।
योनियन्त्रणविधानवेदनाः
का न काः स सहते हतेप्सितः।।१५।

लीलया स्वेच्छया खेलतः प्रचरत इन्द्रियचयस्य नियन्त्रणविधाः नियमप्रकारान् यो ना पुरुषो न वेद न जानाति स नरो हतेप्सितो नष्टमनोरथः सन् काः काः यो नौ यन्त्रणविधानं बन्धनं तज्जनिता वेदनाः पीडा न सहते। अपि तु सर्वयोनिनिवासव्यथाः सहत इत्यर्थः।।

---

१. भा रतीशतुरिवास्तु-क।
२. कमलिनी-क।

तं धिगन्धमिह यस्य रामतो
रा मतोऽधिककदर्थनावहः।
एकवारमपि यस्य नामतो
धाम तोषकरमेति तत्परम्।।१६।।

अधिकां कदर्थनां दुःखमावहति प्रापयति तादृशो रा धनं रामतो हरेः सकासाद्यस्य मतोमान्यः। अभिसर्वतसोरिति द्वितीया। 'राः स्वर्णे जलदे धने' इत्यमरः। रामस्यगुणमाह-एकवारमपि यस्य नाम्ना तत्परं तत्प्रसिद्धं परं केवलं तोषकरं सन्तोषप्रदं धाम ब्रह्मपदमेति।।

क्लेशवारणसमर्थता भवे
केशवादपि परस्य किं भवेत्।
यं नमन्नपि सुरेषु गौरवं
याति पातकिजनो न रौरवम्।।१७।।

भवे संसारे केशवात्परस्याप्यन्यस्यापि क्लेशस्यवारणे सामर्थ्यं किं भवेन्न भवेदेव। पातकिजनोऽपि यं केशवं नमन् सुरेषु देवेषु गौरवं पूजां याति प्राप्नोति न तु रौरवं नरकम्।

यस्य चेतसि न जातु कंसहा
कं [1]सहायमयमेति मानवः।
कालकिङ्कर करान्तरं गतो
रङ्गलो गलितयौवनः [2]स्त्रियाः।।१८।।

यस्य चित्ते जातु कदाचित्कंसहा श्रीकृष्णो न अयं मानवो इह लोके स्त्रिया रङ्गतः क्रीडया गलितयौवनोऽमुत्र यमदूतहस्तमध्यं प्राप्तः सन् कं सहायमेति। न कमपि इत्यर्थः।।

रामनाममहिमा महोत्सवं
यस्य चेतसि तनोति न श्रुतः।
तस्य जीवितमिवावकेशिनो
भूमिभारकरणाय केवलम्।।१९।।

रामनाम्नोमहिमा श्रुतः सन्यस्य चेतसि महोत्सवं न तनोति तस्य जीवितं केवलं भूमिभारकरणाय कस्येव। अवकेशिनो निष्फलवृक्षस्येव। बन्ध्योऽ-

---

१. साहाय

२. यौवनत्श्रिया-क

फलोऽवकेशीत्यमरः।।

न क्रिया समभिहारविक्रिया-
जातपातकमपोहितुं विधिः[१]।
वासुदेव वारिवस्यया विना
या विनाशयति सर्वमप्यघम्।।२०।।

क्रिया ज्योतिष्टोमादिः वासुदेववरिवस्यया हरिपूजया विना समभिहारेण पौनःपुण्येन या विक्रिया क्रोधकामादिस्तज्जातं पातकमपोहितुं निराकर्त्तुं न विभुर्न समर्थाः। या वासुदेवस्य वरिवस्या पूजा सर्वमप्यघं पापं विनाशयति।।

मन्द रे भव कदापि मायया
मा यियासुरिह मातृकुक्षिषु।
प्राप को न भवकाननं गतो-
ऽनङ्गतो मृगपतेः पराभवम्।।२१।।

रे मन्द! इह संसारे मायया कृत्वा कदापि मातृकुक्षिषु जननीजठरेषु यियासुर्गन्तुमिच्छुर्मा भव। संसारे सा न कर्त्तव्या इत्यर्थः। तत्र हेतुमाह- भवकाननं संसारवनं गतः को नरोऽनङ्गतो मृगपतेः कामसिंहात्पराभवं न प्राप। अपि तु सर्वोऽपि कामेन पराभूत इत्यर्थः।

दुर्लभं जनुरवाप्य मानुषं
मानुषङ्गमिहि कालतो मृषा।
रामचन्द्रचरणारविन्दयो-
र्विन्द योगिजनजीवनं युगम्।।२२।।

रे जन्तो! दुर्लभं मानुषं मनुष्यसम्बन्धि जन्म प्राप्य मृषा मिथ्या कालतः कालेनानुषङ्गं सम्बन्धं मा इहि मा गच्छ। मृत्युसम्बन्धं मा प्राप्नुहीत्यर्थः। ततः किं विधेयमत आह- रामचन्द्रचरणकमलयोर्युग्मं योगिजनानां जीवनमाधारभूतं विन्द लभस्व। 'विद् लाभे' शेमुचादिनामिति नुम्।।

रामचन्द्रचरणौ सुकोमलौ
को मलौघमिलिताशयोऽपि सन्।
न स्मरन्विमलतामुपागतो
या गतोऽधिकनमस्क्रियौ हि यौ।।२३।।

मलौघेन पापसमूहेन मिलितः सम्बद्धः आशयश्चित्तं यस्य स तादृशो महापापोऽपि सत्सुतरां कोमलौ रामचन्द्रचरणौ स्मरन्कः पुमान्विमलतां निष्पापत्वं नोपागतः। अपि

---

१. विभुः-क।

तु सर्वोऽपि निष्पापो जातः। हि यतोर्हेतोर्यौ पादौ यागतोऽश्वमेधादेरधिकनमस्क्रियौ अधिकायागाधिकफलदात्री नमस्क्रिया ययोस्तौ। एतदुक्तं- 'एकोऽपि कृष्णस्यकृतः प्रणामो दशाश्वमेधावभृथेरतुल्य' इति।।

**सेवितैव भुवि तर्हि गोमती**
**गोमती यदि मुकुन्दमाश्रिते।**
**यस्य सेवनमपास्य सारवं**
**सारवन्न जलमप्यघापहम्।।२४।।**

यदि गोमती वाग्बुद्धी मुकुन्दं हरिमाश्रिते तर्हि भुवि गोमती नदी सेवितैव। हरिभजनं विना तीर्थं व्यर्थमित्यर्थः। तदेवाह- यस्य हरेः सेवनमपास्य त्यक्त्वा सारवत्सारयुक्तं श्रेष्ठं सारवं सरयूसम्बन्धिं जलमपि नाघापहं न पापहृत्। सरय्वा इदं सारवम्।

**तत्कथं मधुरिपोरनाविलं**
**नाविलम्बमवलम्बसे पदं।**
**यत्समेत्य किल काञ्चनापदं**
**नाप दम्भमतिरप्यहो जनः।।२५।।**

तत्तस्मादनाविलं निर्मलं मधुरिपोः पदमविलम्बं यथा तथा कथं नावलम्बसे ना श्रयसि। अहो आश्चर्ये। दम्भमतिर्दाम्भिकोऽपि जनो यद्धरिपदं समेत्य प्राप्य काञ्चनापदं किमपि दुःखं नाप न प्राप। किलेति श्रुतौ।।

**किं गतेन गुरुतापसे वने**
**सेवने कुरु मतिं मधुद्विषः।**
**आत्मसान्न कुरुते हि कं सवं**
**कंसवंशवधकृन्नतेर्नरः[1]।।२६।।**

गुरवः श्रेष्ठास्तापसा यस्मिन्वने तत्र गतेन गमनेन किम्। मधुद्विषो हरेः सेवने मतिं कुरु। हि यतः कंसवंशवधकृन्नतेः कंसान्वयनाशकस्य हरेर्नमस्काराद्धेतोर्नरः कं सवं यज्ञमात्मसादात्माधीनं न कुरुते। हरिचरनत्यैवाश्वमेधादि फलप्राप्तौ किं वनगमनेनेत्यर्थः।।

**अस्ति कामविषयेऽथवा मति-**
**स्तत्परोऽयमुपदेश उच्यते।**
**पद्मनाभपरिचर्य्यया परं**
**तं निशम्य हृदये कुरुस्थिरं।।२७।।**

१. तेर्नरः-क।

ते कामविषये मतिरस्ति तर्हि तत्परः कामविषयोऽयमुपदेशः कथ्यते। तमुपदेशं परमुत्कृष्टं मोक्षविषयं निशम्य श्रुत्वा वेदान्त श्रवणेनावधार्य पद्मनाभपरिचर्य्यया हरिसेवया हृदये स्थिरं कुरु। मोक्षातिरिक्तं कामं मा कार्षीरित्यर्थः।।

केवलं कलय नन्दनन्दनं
नन्द नन्दनगतश्चिराय च।
सेवितो विबुधवल्लभाजनै-
र्भाजनैः सपदि सर्वसम्पदाम्।।२८।।

केवलं नन्दनन्दनं हरिं कलय ध्यायस्व। 'कल संख्याने गतौ चेति'। धातुरदन्तश्चुरादिः। ततः सर्वसम्पदां भाजनैः पात्रभूतैर्विबुधवल्लभभाजनैर्देवस्त्री-समूहैरुर्वश्यादिभिः सेवितो नन्दनगतो देवोद्यान स्थितश्चिराय नन्द क्रीड।।

चक्रपाणिचरणार्चनादरो
ना दरोज्जितमना यमादपि।
विष्टपे भवति दुष्टशासिता
भासिताखिलदिगन्तरः श्रिया।।२९।।

चक्रपाणिचरणार्चने हरिपादपूजने आदरो यस्य स ना पुमान् ईदृशो भवति। विशेषणैः सेवनफलमाह- यमादपि दरेण त्रासेनोज्झितं त्यक्तं मनो यस्य। विष्टपे लोके दुष्टानां शासिता नियन्ता। तथा श्रिया भासितान्यखिलानि दिगन्तराणि येन। जगद्व्यापिकीर्त्तिरित्यर्थः।।

वासरे मधुरिपोरुपोषिताः
कामिनो दिवि वसन्ति भूषिताः।
उर्वशीप्रमुखवारयोषिता[1]-
मालिभिर्ललितभावतोषिता।।३०।।

मधुरिपोर्वासरे एकादश्यामुपोषिता उपवासवन्तः कामिनः सकामा नरा भूसिता भूषणालंकृताः सन्तो दिवि स्वर्गे वसन्ति। उर्वश्यादिस्वर्गनारीणां पंक्तिभिर्मनोहरै-र्भावैर्विलासैस्तोषिता हर्षिताश्च।।

जाग्रतो हरिपदाम्बुजाग्रतो
यस्य याति सकलां विभावरी।
तत्कलेवरविभा वरीयसी
स्वः सदैव रविभावदुल्लसेत्[2]।।३१।।

---

१. देवयोषिता-क।
२. दुर्ल्लसेत्-क।

हरिचरणाग्रे जाग्रतो निद्रामकुर्वतो यस्य पुंसः सकला विभावरी रात्रिर्याति तस्य कलेवर विभा शरीरकान्तिर्वरीयसी श्रेष्ठा स्वः स्वर्गे सदैव रविभावत्सूर्य्यकान्तिवत् शोभते।।

रामनामभणितिं सुधाविधां
मा मनागपि मुखाम्बुज त्यज।
यामनादृतवति प्रतीयते
कामना नरि न दूरदूषणा।।३२।।

सुधाविधाममृततुल्यां रामनामभणितं हरिनामोक्तिं मुखकमलान्मनाक् स्तोकमपि मा त्यज्य। शश्वद्धरिनामानि जपेत्यर्थः। यां रामनामोक्तिमनादृतवती असेवमाने नरि पुंसि दूरदूषणा दूरे दूषणं यस्यास्तादृशी दूषणहीना कामनाभिलासो न प्रतीयते। हर्यभक्तस्याभीष्टालाभात्।।

यादृशेन मनसा जनार्द्दनं
सेवते सकलदेवतातनुम्।
तादृशं फलमुपैति मानवः
स्वर्ग सौख्यमथ मुक्तिमुत्तमाम्।।३३।।

मानवो नरः सर्वदेवस्वरूपं हरिं यादृशेन सकामनिष्कामेन मनसा सेवते तादृशं फलं स्वर्गसौख्यमुत्तमां मुक्तिं चोपैति। निःकामसकामभेदेन।।

मानसं यदि करोषि रामसा-
त्कामसाध्यतमसंपदं ततः।
मन्यसे यदुपचारचातुरी
धातुरीड्यतरतां न कं नयेत्।।३४।।

यदि मानसं चित्तं रामसाद्रामाधीनं करोषि। ततस्तर्हि कामसाध्यतमसम्पदं मन्यसे। तदा सर्वापि सम्पत्साधैव। यदुपचारचातुरी यस्य हरेः सेवने चातुर्य्यं कं नरं धातुर्ब्रह्मणोऽपीड्यतरतां स्तुत्यतमत्वं न नयेत्।। हरिसेवी धातुरपीड्यो भवतीत्यर्थः।।

क्लेशमूलमखिलं वसुप्रजा-
पौरुषादि सुलभं शरीरिणाम्।
दुर्लभा जगति भुक्तिकारणं
रामचन्द्रचरणार्चने रतिः।।३५।।

क्लेशानां रागादीनां मूलं कारणं वसुप्रजापौरुषादि धनसन्तानपराक्रमादि सकलं शरीरिणां सुलभं परन्तु जगति भूतले मुक्तेः कारणता हरिपादपूजायां प्रीतिर्दुर्लभा इत्यर्थः।।

विष्णुभक्तिजितवासनाशया
नाशया तरलयन्ति मानसम्।
मालतीमधुनि लब्धकेलयः
केलयः कुरबकेषु सस्पृहाः।।३६।।

हरिभक्त्या जिता नाशिता वासना दुष्टप्रीतयो यस्मादीदृशः आशयश्चित्तं येषां तादृशा नरा आशया तृष्णया मानसं न तरलयन्ति चञ्चल न कुर्वन्ति। तत्र दृष्टान्तः- मालतीकुसुमेरसे लब्ध्वा केलिः क्रीडा यैस्तादृशाः के अलयो भ्रमराः कुरबकेषु करीरेषु सस्पृहाः सतृष्णा भवन्ति। न केऽपीत्यर्थः।।

तावका वयमनन्त शावका
नावकाशमपि किं निरीक्षितुम्।
तद्ददासि बत बालवत्सलो
विश्वबीज जनको न को भवेत्।।३७।।

हे अनन्त! यदि वयं तावकास्त्वत्सम्बन्धिनः शावकाः शिशवः। 'पृथुकः शावकः शिशुरित्यमरः'। तत्तर्हि इह संसारे निरीक्षितुमस्मान्द्रष्टुमवकाशं किं न ददासि। कुत्रापि समयेऽस्मानवलोकयेत्यर्थः बतेति हर्षे। हे विश्वबीज जगत्कारण! को जनकः पिता बालवत्सलो बालप्रियो न भवेत्। पिता पुत्रप्रियो सर्वोपि भवेदेवेत्यर्थः।।

भक्तिरस्ति यदि कृष्ण तावकी
तत्किमेति भवसम्भवं भयम्।
अन्धकारगरिमा करोति किं
भास्करे नयनमार्गमागते।।३८।।

हे कृष्ण! यदि तावकी भक्तिरस्ति तत्तर्हि भवसम्भवं संसारोत्छं भयं किमेति प्राप्नोति। न प्राप्नोतीत्यर्थः तत्र दृष्टान्तः - भास्करे रवौ नयनमार्गं चक्षुर्विषयमागते सति अन्धकारगरिमा तमो बाहुल्यं किं करोति। न किमपीत्यर्थः।।

श्रीनृसिंह तव पादयोर्द्वयं
नित्यमत्ययभयादयादयम्।
मन्मनोऽणुरणुभिर्विना भयं
रंरमीतु सुरसिन्धुसम्भवैः।।३९।।

हे श्रीनृसिंह! अयं मन्मन एवाणुः परमाणुरत्ययभयान्मृत्युभीतेर्हेतोस्तव पादद्वयं नित्यमयात् सर्वदा प्राप्तः। अतः सुरसिन्धुसम्भवैः पदद्वयगतैर्गङ्गोद्भवैरणुभिर्जलबिन्दुभिः सह भयं विना मृत्युभयं विहाय रंरमीतु अत्यन्तं रमताम्। रमतेर्यङ्लुकि लोटि रूपं।।

**इन्द्रियं विषयसाधनप्रियं**
**विग्रहः सपदि दत्तनिग्रहः।**
**मानसं मिषति का न सम्पदः**
**केवलं तु मम ते बलं हरे।।४०।।**

हे हरे! ममेन्द्रियं चक्षुरादि विषयाणां साधनं सम्पादनं प्रियं यस्येदृशम्। विग्रहः शरीरं दत्तो निग्रहः पराजयो येन तादृशः। मानसं काः सम्पदो न मिषति न स्पृहयति। सर्वा अपीत्यर्थः। एवमिन्द्रियदेहमनस्सु मां पराभवत्सु मम केवलं ते तव बलम्। त्वं रक्षक इत्यर्थः।।

**रामचन्द्र तव भक्तियोगतो**
**यो गतो जनभृतामपि क्षणः।**
**तेन तन्नरकसंघसाध्वसं**
**साध्वसम्भवमशेषतो व्रजेत्।।४१।।**

हे रामचन्द्र! जनिभृतां प्राणिनां तव भक्तियोगाद्यः क्षणः कालो गतस्तेन नरकसमूहाज्जातं साध्वसं भयमशेषतः समग्रं साधु यथा यथा असम्भवं नाशं व्रजेत्। क्षत्रमात्रकृतया तव भक्त्या यदि पापनाशस्तर्हि जन्मावधि कृतया किमु वक्तव्यमित्यर्थः।।

**पद्मनाभ तव पादपद्मयोः**
**पद्मयोनिरूपचारुचातुरीम्।**
**शीलयन्भुवनकर्त्तृतामगा-**
**त्तामगाधमहिमश्रियं च सः।।४२।।**

हे पद्मनाभ! पद्मयोनिर्ब्रह्मा तवाङ्घ्रिकमलयोः सेवनचातुर्य्यमभ्यसन् लोककर्तृत्वं प्राप। तां प्रसिद्धिमगाधो महिमाकीर्त्तिर्यस्यास्तादृशीं श्रियं च सोऽगादिति सम्बन्धः।।

**रामचन्द्र तव पादसेवया**
**देव याति न किमीहितं नरः।**
**तन्न रक्षसि कथं दयानिधे**
**तानि धेहि चरितानि ते मयि।।४३।।**

हे रामचन्द्र, हे देव! तवाङ्घ्रिसेवया नरः किमीहितं कमभिलाषं न याति नाप्नोति। सर्वाभिलाषदायिनी तव भक्तिरित्यर्थः। हे दयानिधे! तत्तर्हि कथं न रक्षसि। मामिति शेषः। तानि प्रसिद्धानि ते तव चरितानि गोवर्द्धनोद्धरणादीनि मयि धेहि धारय। तव चरितविस्मरणं मास्त्वित्यर्थः।

**चन्द्रदीधितिचयान्प्रभावतो**
**भावतोऽपि हि जयन्ति याः प्रभो।**

कीर्त्तयो हृदि लसन्तु मे घना
मेघनादवधबन्धुरास्तव।।४४।।

हे प्रभो! मेघनादो रावणात्मजस्तस्य बधेन बन्धुरा मनोहरा घना निविडास्तव ताः कीर्त्तयो मे मम हृदि लसन्तु स्फुरन्तु। ताः काः। याः प्रभावतः प्रभावेण महिम्ना भावतः कान्तिमतः चन्द्रदीधिति च यान् शशिरश्मिसमूहान् जयन्ति। ततोऽप्युज्ज्वलाः इत्यर्थः।।

ये भजन्ति तव पादपङ्कजं
पङ्कजं न भयमाप्नुवन्ति ते।
यस्य पादकमलार्च्चनेहया
नेह याति भविता जनः पुनः।।४५।।

हे हरे! ये तव पादकमलं भजन्ति ते पङ्कजं पापजातं भयं न प्राप्नुवन्ति। यस्य पादपद्मपूजालक्षणया ईहया चेष्टया जनः पुनरिह लोके भविता जन्मवत्वं न याति नाप्नोति।।

पीतचीवरधरं रमापतिं
नीलनीरजदलोपमद्युतिम्।
मालया तुलसिमञ्जरीभुवा
भूषितं भुवनभूषणं भजे।।४६।।

पीतं चीवरमंशुकं धरति तं रमायाः पतिं कान्तं नीलं यन्नीरजदलं पद्मपत्रं तत्तुल्या द्युतिर्यस्य तं श्यामं तुलसिमञ्जरी जातया मालया भूषितं लोकाभरणं हरिं भजे। तुलस्यामञ्जरीति समासेऽपि इकारौ स्त्रीकृतौ ह्रस्वौ क्वचिदिति ह्रस्वः।।

मन्महे किमपि [1]तन्महेशितु-
र्धाम नित्यरमणीयमव्ययम्।
यद्विदन्ति नहि सूरयो जना
वेदवाचि कृतयुक्तियोजनाः।।४७।।

नित्यं रमणीयं सुन्दरव्ययेमपि क्षयहीनं किमपि लोकोत्तरं महेशितुर्हरेस्तद्धाम स्वरूपं वयं मन्महे चिन्तयामः। वेदवाचि वेदवाण्यां कृता युक्त्या योजना यैस्तै। वेदार्थज्ञा अपि सूरयो बुधाजना यद्धाम न विदन्ति न जानन्तीत्यर्थः।।

रागिणां सुरतरङ्गिणीक्षणा-
त्स्वर्वधूसुरतरङ्गिणी तनुः।
अस्तु किं पुनरियं विरागिणां
देहमात्रमपि यन्न सासहिः।।४८।।

---

१. तत्मेह- क।

